अथभर्तृहरिकृतशृंगारशतकसटीकप्रारंभोयं.

श्रीकृष्णायनमः इदानींशृंगारशतकंव्याख्यायते सम्यग्विचारितंचेत्परिणामेवैराग्यमेवास्ति
निंदास्तुतिः स्त्रीनिर्निंदावाद्विःप्रकारोस्ति अत्रतावत्स्त्रीनिंदाप्रकारः स्त्रीणांशृंगारश्चनश्वरः एतयोः
सकाशात्सुखंतन्नश्वरंपरिणामेदुःखमेव एवंसतिविषयिभिः अविचार्यबहुतरंस्तूयतेसास्तु



श्रीकृष्णायनमः शंभुःस्वयंभुहरयोहरिणेक्षणानांयेनाक्रियंतसततंगृ
हकर्मदासाः वाचामगोचरचरित्रविचित्रितायतस्मैनमोभगवतेकुसुमायु
धाय १

तिरादौनांतिलिखति शंभुरिति शंभुः शिवः स्वयंभूः ब्रह्माहरिर्विष्णुः एतेमहां
नः ईश्वराः येनमदनेनसततंनिरंतरंगृहकर्मदासाः कृताः तस्मैकुसुमायुधायनमोस्तु वाचा १
मगोचराणिचरित्राणितैर्विचित्रितायनानाप्रकाराय १ ७ ७ ७

नत्रादौ स्त्रीप्रशंसा । स्मितेन हास्येन भावेन चित्ताभिप्रायेण लज्जया भिया भयेन पराङ्मुखैः रद्धैनि कटाक्षेण वीक्षितानि नेत्रालोकनानि तैः वचोभिः परोत्कर्षासहिष्णुता ईर्ष्या तया ईर्ष्यया कलहेन लीलया इति समस्तभावैः खलु निश्चयेन स्त्रियः बंधनं भवति २ भ्रुवोर्यच्चातुर्यं तेन आकुंचितानि अक्षी

स्मितेन भावेन च लज्जया भिया पराङ्मुखैः रर्द्धकटाक्षवीक्षणैः वचोभिरीर्ष्याक लहेन लीलया समस्तभावैः खलु बधनं स्त्रियः २ भ्रूचातुर्याकुंचिताक्षाः कटाक्षाः स्नि धावाचो लज्जिताश्चैव हासाः लीलामंदं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चायुधं च ३

णि नेत्राणि येषु एवंभूताः कटाक्षाः स्निग्धाः स्नेहयुक्ता वाचः लज्जिता लज्जायुक्ता हासाः लीलया स्व-भावेन मंदं शनैः प्रस्थितं प्रयाणं स्थितं च स्त्रीणां एते पदार्थाः भूषणमायुधं च भवति ३ ७

भ॰ भृं॰ २

प्रथमसमागमोजानोयासांनवोढानांवदनान्येवकमलानितैः नेत्रचलितैः नेत्राणिचलितानितं

चलानियेषुतैः स्फुरन्नीलालीनांप्रकरः समुदायःस्तेनपरिपूर्णाइवदृश्योभवंति वदनानिकम-

लानितेषुनेत्रचालितानि तएवभ्रमरास्तैः पूर्णानिदृश्यंते कथंभूतैर्वदनैः कचित्कभ्रूभंगैर्भ्रूभं

कचित्सुभ्रूभंगैः कचिदपिचलज्जापरिणतैः कचिद्भीतित्रस्तैः कचिदपिचलीला

विलसितैः नवोढानामेभिर्वदनकमलैर्नेत्रचालितैः स्फुरन्नीलालीनांप्रकरपरि-

पूर्णाइवदृशः ४ वक्त्रंचंद्रविकासिपंकजपरीहासक्षमेलोचनेवर्णःस्वर्णमपा

करिष्णुरलिनीजिष्णुःकचानांचयः गाम्भलनानियेषुतैः कचिल्लज्जयाविलसितैः

शोभितैर्वदनैः ४ वक्त्रंचंद्रविकासिचंद्रवत्वर्तुलंशोभायमानंपंकजानांपरीहासःविकसनंतदृत्

क्षमेलोचने वर्णः कांतिः स्वर्णं सुवर्णं अपाकरिष्णुः सुवर्णतो ऽधिकः कचानां केशानां चयः समुदा
यः अलिनीं भ्रमरीं जिष्णुः वक्षोजौ स्तनौ इभस्य गजस्य कुंभः गंडस्थलं तस्य संभ्रमः शोभा तस्य हरौ
कठिनौ गुर्वी पृथुला नितंबस्थली पश्चात्कटिप्रदेशः मार्दवं वचनानां वचनानां हारि अत्यंतकोमलानि

वक्षोजाविभकुंभसंभ्रमहरौ गुर्वी नितंबस्थली वाचां हारि च मार्दवं युवतिषु स्वा
भाविकमंडनम् ५ स्मितं किंचिद्वक्त्रे सरलतरलो दृष्टिविभवः परिस्पंदो वाचाम
भिनवविलासोक्तिसरसः वचनानि एते पदार्थाः युवतिषु स्वाभाविकं स्वभावेनैव मंडनम्
भवति ५ तारुण्यं स्पृशंत्या मृगदृशः किमपि किंचिदपि इह रम्यं नाहि इति न रम्यमेवास्ति तत्किं
वक्त्रे किंचित्स्मितमल्पं हास्यं सरलोतरलश्चंचलः दृशो विभवः सामर्थ्यं विलासेन दर्शनशक्तिः

अभिनवाविलासोक्तिः तयासरसः मधुरः वानांवचनानांपरिस्पंदःचक्रव्यतागतीनांगमनानामारंभः
किसलयितलीलापरिकरः किसलयाः नवपल्लवाः अत्यंतमृदवः तद्वन्मृदुः शनैः मृदुगमनमित्यर्थः
रम्याः सुंदराः ६ स्फ़हृदयैः आसक्तचित्तैः द्रष्टव्येषुकिमुत्तमंद्रष्टव्यंमृगदृशांप्रेम्णाप्रीत्याप्रसन्नंमु

गतीनामारंभः किसलयितलीलापरिकरः स्पृशंत्यास्तारुण्यं किमिहनहिरम्यंमृग
दृशः ६ द्रष्टव्येषुकिमुत्तमंमृगदृशांप्रेमप्रसन्नंमुखंघ्रातव्येष्वपिकिंतदास्यपव
नः श्राव्येषुकिंतद्वचः किंस्वाद्येषुतदोष्ठपल्लवरसः स्पर्शेषुकिंतत्तनुर्ध्येयंकिंनवयौ
वनंस्फहृदयैः सर्वत्रतद्विभ्रमः ७

खं घ्रातव्येषुकिमुत्तमंतदास्यपवनः श्राव्येषुकिमुत्तमंतद्व २
चः स्वाद्येषुकिंतस्याओष्ठपल्लवस्यरसः स्पर्शेषुकिंतस्यास्तनुः ध्येयंकिंतस्यानवयौवनंसर्वत्रसर्वदाविभ्र
मः विलासः स्मरणीयः ७

एतास्तरुण्याकटाक्षैः कस्यमनः विवशंस्वाधीनंनकुर्वंतिसर्वस्यकुर्वंत्येव कथंभूताः स्खलंतिशब्दाय
मानानिवलयानिमेखलाश्चतत उत्थितंझंकारः झणत्कारः तेनसहएतादृशानिनूपुराणितेषांरवात्शब्दा
त्हताजितारा तहंसानांस्त्रियःयाभिस्ताः कथंभूतैः कटाक्षैः वित्रस्ताभयभीतामुग्धाहरिणास्तासांयथा

एताःस्खलद्वलयसंहतिमेखलोत्थझंकारनूपुररवाहृतराजहंसाः कुर्वंतिकस्यनमनोविवशंतरुण्योवित्रस्तमुग्धहरिणीसदृशैःकटाक्षैः ८ कुंकुमपंककलंकितदेहा गौरपयोधरकंपितहारा नूपुरहंसरणत्पदपद्माकंनवशीकुरुतेभुविरामा ९ मेक्षणानि

तत्सदृशैः ८कुंकुमस्यपंकः कर्दमः तेनकलंकितो देहोयस्याः सागौरोपयोधरौस्तनौताभ्यांकंपितः हारोय
स्याः सान्नूपुराण्येव हंसास्तैरणंतिशब्दायमानानिपदान्येवपद्मानियस्याः साएवंभूतारामास्त्रीभुविकंपुरुषं
वशीनकुरुते करोत्येव ९

तेत्वविचारश्रेष्टाः नूनं निश्चयेन विपरीतबोधाः विपरीतज्ञातारः येकामिनीनाम बला इति नित्यमाहुः
यदंतियाभिः कामिनीभिः अतिशयेन विलोलतरास्तारका एषां एवंभूतैर्दृष्टिपातैः प्रेक्षणैः शङ्का

नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुरबला इति कामिनी
नाम् याभिर्विलोलतरतारकदृष्टिपातैः शक्रादयोपि विजिता
स्त्वबलाः कथं ताः १० नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः
यतस्तन्नेत्रसंचारः सूचितेषु प्रवर्त्तते ११

दयोपि जिताः तु इति निश्चयेन कथं ता अबलाः प्रोक्ताः १० ११ श्रीसीतारामचंद्राभ्यां नमः

केशाः संयमिनः आवृत्ताबद्धाः लोचने श्रुतेः कर्णस्यापि परंपारं प्रांतंगते स्वभावेनैव शुचिभिः शुद्धैः द्वि
जानां दंतानां गणैः अंतर्वक्त्रं कीर्णंव्याप्तं मुक्ताफलानां सततमधिवासः वसतिस्तया रुचिरं शोभायमा

केशाः संयमिनः श्रुतेरपि परं पारंगते लोचने अंतर्वक्त्रमपि स्वभावशुचिभिः की
र्णं द्विजानां गणैः मुक्तानां सततादिवासरुचिरं वक्षोजकुंभद्वयमित्थं तन्वि वपुः
प्रशांतमपि ते क्षोभं करोत्येव नः १२ मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते य
थाहरिषि चेतांसि गुणैरेव न सायकैः १३ सति प्रदीपे सत्यग्नौ सत्सु नारारवींदुषु
।विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् १४ नं वक्षोजौ स्तनौ तावेव कुंभौ तयोर्द्वयं
हे तन्वि इत्थमुक्तप्रकारं ते तव वपुः प्रशांतमपि नोस्माकं क्षोभं करोत्येव १२ १३ १४

हेकामिनि यद्यस्मात्कारणात् तव एष वर्त्तुलः स्तनभारः तरलेचंचलेनेत्रेचलेचंचलेश्रूभेभ्रूलते इ
दमोष्ठपल्लवं एतानितव अस्माकं नाम इति निश्चयेन रागोऽइच्छातयाअंधेषु व्यथांकुर्वंतितत्कुर्वं



यद्यत्तेस्तनभारएषतरलेनेत्रेचलेभ्रूलतेरागांधेषुतदोष्ठपल्लवमिदंकुर्वंतुनाम
व्यथाम् सौभाग्याक्षरपंक्तिरेवलिखितापुष्पायुधेनस्वयंमध्यस्थापिकरोतितेना
पममधिकंरोमावलीकेनसा १५ गुरुणास्तनभारेणमुखचंद्रेणभास्वता शनैश्च
राभ्यांपादाभ्यांरेजेग्रहमयीवसा १६

तु कुतः पुष्पायुधेन मदनेन स्वयंतवभालेषुसौभा
ग्याक्षरपंक्तिरेवालेखितावर्त्तते अतोस्माकंकिमपिनचलतिपरंतु इयंतवोदरे रोमावलीमध्यस्था ५
पितापंकरोतितत्केनकारणेनतन्नज्ञायते १५ १६ ॐ ॐ ॐ

केचित्तस्याः स्तनौ घनौ कठिनौ तथाच जघनं विहारि क्रीडायोग्यं तथाच वक्त्रं चारु सुंदरं यदि तर्हि
तव व्याकुलत्वं किमर्थं यदि तव वांछास्ति तर्हि पुण्यं कुरुष्व समीहितार्था अभीप्सितार्थाः पुण्यैर्विनान

तस्यास्तनौ यदि घनौ जघनं विहारि वक्त्रं च चारु तव चित्त किमाकुलत्वम् पु
ण्यं कुरुष्व यदि तेषु तवास्ति वांछा पुण्यैर्विना न हि भवंति समीहितार्थाः १७
मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदंतु सेव्या नितंबाः किमु भू
धराणामुत स्मरस्मेरविलासिनीनाम् १८

भवंति १७ भो आर्याः मात्सर्यमुत्सार्य त्य-
क्त्वा विचार्य च इदं समर्यादं कार्यं वदंतु तत्किं यदि परमार्थं चेत् तर्हि भूधराणां नितंबाः सेव्याः नो
चेत्स्मरस्य मदनस्य स्मेरः भरः तेन विलासिनीनां नितंबाः सेव्या इति १८ छ छ

अस्मिन् संसारे पंडितानां हे अस्थिरे अत स्तत्त्व ज्ञाने नेवामृतोदकेन प्लुनातीक्ष्णाधीर्येषां एवंभूतः
कालः कदाचिन् यातु गच्छतु एकागतिः नो चेत्तर्हि स्तनजघनयोर्भरस्तास्मिन् भोगसंयोगो यासां

संसारे स्मिन्नसारे परिणातितरले द्वे गती पंडितानां तत्त्वज्ञानामृतांभःप्लुतललित
धियां यातु कालः कदाचित् नो चेन्मुग्धांगनानां स्तनजघनभराभोगसंभोगिनी
नां स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम् १९ मुखेनचंद्र
कांतेन महानीलैः शिरोरुहैः पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा २०

मुग्धांगनानां स्थूलोपस्थस्थलीषु भूमिषु स्थागितः करतलस्पर्शस्तास्मिन् लोलास तृष्णानामु
द्यतानां तासां संगेन कालो यातु इयं गतिर्द्वितीया १९ २० ७ ७

२१ इतिस्त्रीप्रशंसा अथभोगादिलक्षणम् काचित्तन्वीविरहिणीनवद्रुमाणांछायासु विभ्रम्य
विभ्रम्यविचचार स्तनोत्तरीयेणस्तनोपरिवस्त्रेणकरोद्धृतेनशशिनःचंद्रस्यमयूखान् किरणान्नि

संमोहयंतिमदयंतिविडंबयंतिनिर्भर्त्सयंतिरमयंतिविषादयंति एताःप्रविश्य
सदयंहृदयंनराणांकिंनामवामनयनानसमाचरंति २१ विभ्रम्यविभ्रम्यवनद्रुमा
णांछायासुतन्वीविचचारकाचित् स्तनोत्तरीयेणकरोद्धृतेन निवारयंतीशशिनो
मयूखान् २२ अदर्शनेदर्शनमात्रकामादृष्ट्वापरिष्वंगरसैकलोला आलिंगिता
यांपुनरायताक्ष्यामाशास्महेविग्रहयोरभेदम् २३ वारयंतीव २२ अदर्शनेसतिदर्शनमा
त्रमेवकामोयस्याःसापश्चात् दृष्टाचेत् परिष्वंगस्यआलिंगनस्यरसैकलोलुपसतृष्णापुनःआलिंगितायां
मायताक्ष्यांसत्यांपरस्परंविग्रहयोः कलहयोरभेदमाशास्महे २३

यस्य मालती पुष्पमाला शिरसि जृंभणोन्मुखी विकसन्मुखी विकासिता यथा च वपुषि चंदनं कुंकुमेन युक्तं यथा च वक्षसि हृदये प्रियतमा मनोहरा वर्तते तस्य स्वर्गो भोग उक्तः अवशिष्टः उर्वरितः एषोऽत्र आगतः अत्रापि स्वर्गभोगो भवति २४ कुलस्त्रीरतं रम्यं कथं प्राक् पूर्वं मां प्रति एनि मनागेकवा

मालती शिरसि जृंभणोन्मुखी चंदनं वपुषि कुंकुमान्वितम् वक्षसि प्रियतमा मनोहरा स्वर्ग एष परिशिष्ट आगतः २४ प्राङ्नामेति मनागमानित गुणं जाताभिलाषं ततः सव्रीडं तदनुश्लथोद्यतमनु प्रत्यस्तधैर्यं पुनः

रम् अमानित गुणं स्वयमेव आगमिष्यति इति कारणात् आदरेणैव कृतः ततः जाताभिलाषं इच्छा जाता ततः सव्रीडं लज्जया सहआयतात तदनुश्लथोद्यतं शिथिलतया उद्यता श्लथ वृताः अनु पश्चात् प्रत्यस्त धैर्यं त्यक्तधैर्यं पुनः प्रे

म्णा आर्द्रः स्पृहणीयः निर्भर आदरः तेन रहः एकांतक्रीडायां प्रगल्भा त्यक्तलज्जा ततः निःशंक
मंगविकर्षणेन अधिकं सुखं एवं शनैः शनैः त्यक्तलज्जमिति कारणात् रम्यम् २५ २६ आईषत्मी

प्रेमार्द्रस्पृहणीयनिर्भररहःक्रीडाप्रगल्भा ततो निःशंकांगविकर्षणाधिकसुखं
रम्यं कुलस्त्रीरतम् २५ उरसि निपतितानां स्रस्तधम्मिल्लकानां मुकुलितनयनानां
।किंचिदुन्मीलितानाम् सुरतजनितखेदस्वार्द्रगंडस्थलीनामधरमधु वधूनां
भाग्यवंतः पिबंति २६ आमीलितनयनानां यः सुरतरसोनुसंविदं कुरुते मि-
थुनैर्मिथोवधारितमवितथमिदमेव कामनिर्बर्हणम् २७ लितनयनानां स्त्रीणां यः सुर
तरसः अनुसंविदं सुखं कुरुते इदमेव कामस्य निर्बर्हणं कर्तव्यं मिथुनैः द्वंद्वैः मिथः परस्परमवधारितं ज्ञा
तमन्योन्यतं जानाति २७ ॥

भ॰ शृं॰ ८

पुंसां यत् यस्मात् जरास्वपि मान्मथाः मदनस्य विकाराः कृताः इदमनुचितं कृतमक्रमश्च क्रमोपि
नैव तदपि तथा च नितंबिनीनां स्त्रीणां स्तनपतनमेव अवधि जीवितं रतं वा न कृतं इदमपि अनुचि

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः तदपि च न कृतं
नितंबिनीनां स्तनपतनावधि जीवितं रतं वा २८ एतत्कामफलं लोके यद्द्वयोरेक
चित्तता अन्यचित्तकृते कामे शवयोरिव संगमः २९ प्रणयमधुराः प्रेमोद्गाढा रसा
दलसास्तथा भणितिमधुरा मुग्धप्रायाः प्रकाशितसंमदाः तं कृतम् २८ २९

मृगीदृशां रहसि स्वैरं यथेष्टमालापवचनानि किमपि अनिर्वचनीयं सुखं कुर्वंति कथं भूताः आ ८
लापाः प्रणयेन प्रीत्या मधुराः प्रेम्णा उद्गाढाः अतिशयरसा दलसाः तथा भणितिरति कूजितेम

श॰ २

धुराः मुग्धप्रायाः अस्फुटाः प्रकाशितः प्रकर्षेणमदोयैस्ते प्रकाशितसंमदाः प्रकृत्या स्वभावे
न सुभगाः सुंदराः विस्रंभार्हा विश्वासयोग्याः स्मरस्यउदयंददतीतितेस्मरोदयदायिनः २०

प्रकृतिसुभगाविस्रंभार्हाः स्मरोदयदायिनोरहसिकिमपिस्वैराला
पाहरंतिमृगीदृशाम् २० आवासः क्रियतेगांगेपापहारिणिवारिणि
तनुमध्येतरुण्यावामनोहारिणिहारिणि ३१ प्रियपुरतोयुवतीनांताव
त्पदमातनोतुहृदिमानः भवतियावच्चंदनतरुसुरभिर्मधुभिर्मलया
निलःपवनः २२

३१ युवतीनांमानः अहंकारः तावत्पदमातनोतुविस्तार
यतु यावत्मलयानिलोनभवति इतिभोगादिलक्षणम् २२ ७ ७

परिमलभृतः परिमलयुक्ताः वाता वायवः प्रकटिताः वृक्षाणां शाखाः पल्लवाः नवांकुरकोटयः
नवांकुरयुक्ताः अभवन् पिकपक्षिणां प्रियाः मधुराविरतोत्कंठवाचः उच्चैरुत्कंठितमधुर



अथऋतुवर्णनम् तत्रादौवसंतः परिमलभृतोवाताःशाखानवांकु
रकोटयोमधुरविरतोत्कंठवाचः प्रियाः पिकपक्षिणाम् विरलसुरत
स्वेदोद्गमावधूवदनेंदवःप्रसरतिमधौराज्ञ्यांजातोनकस्यगुणोदयः २२

वाचः अभवन् विरलाः स्वल्पाः सुरते संभोगे स्वेदस्तस्यादुद्गमाः उद्गमस्वेदाः वधूवदनेंदवः अभवन् ए
वंमधौवसंतेप्रसरतिप्रकाटिते सति अभवन् तस्यमधोराज्ञ्यांकस्यगुणोदयः मदनाविर्भावोनजातः भव
त्येव २२

अयं मधुर्वसंतः शरीरिणोपि विहारिणः मधुरैरपि कोकिलाकलकलैः तथा मलयस्य वायुभिः प्राणि हंति मारयति ननु कोकिलाकलकला मधुराः तथा वायुरपि प्रियकरः एभिर्मरणं न घटने तर्हि

मधुरयं मधुरैरपि कोकिलाकलकलैर्मलयस्य च वायुभिः विहारिणः प्राणि हंति शरीरिणो विपदि हंत सुधापि विषायते २४ आवासः किल किंचिदेव दयितापार्श्वे विलासालसः कर्णे कोकिलकाकलीकलरवः स्मेरो लतामंडपः

घटत्येव कथं विपदि विपत्काले सुधा अमृतमपि किं विषायते विषं भवति २४ आवासः वसतिः किल इति श्रूयते विलासेन अलसः दयितापार्श्वे किंचिदेव स्मेरः प्रियो भवति कर्णे कोकिलानां काकली सूक्ष्मध्वनिः तथा कलरवः गंभीरो रवः शब्दः प्रियो भवति लतामंडपः प्रियो भवति कांतिपर्यंः

सत्कविभिः समं गोष्ठी प्रियाः भवंति सितांशोः कराः किरणाः सेव्याः भवंति एते पदार्थाः केषां चिन्नेत्रहृदये सुखयंति अप्रवासिनस्तेषां ये प्रवासिनस्तेषां दुःखरूपा भवंति एवं चैत्रमासा

गोष्ठिः सत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः केषांचित्सुखयं ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ३५ पांथस्त्रीविरहानलाहुतिकलामा तन्वती मंजरी माकंदेषु पिकांगनाभिरधुना सोत्कंठमालोक्यते

दिक्षपा निशा विचित्रा भवंति ३५· अन्यत् किं वसंते भवति कांचनवृक्षस्य मंजरी पांथस्य स्त्री नस्या विरह एव अनलः अग्निस्तस्मिन्नाहुतिकलामातन्वती विस्तारयंती एवंभूता मंज रीपिकांगनाभिः सोत्कंठमालोक्यते अथ चंद्रखंडशैलानिलामलयमारुतः प्राग्भारपाद

च्चरावांति कथंभूताः नवानासौ पाटलाच तस्याः परिमलायेषुनः क्रांतिकुमानांमधौ वसंते कस्यउत्कंठानभवेत् ३६ कथंभूतेमधौ सहकारस्यकुसुमानांकेसराणितेषांभरः समुदा

अप्येतेनवपाटलापरिमलाःप्राग्भारपाटच्चरावांतिक्रांतिवितानतान
वक्रुताःश्रीखंडशैलानिलाः ३६ सहकारकुसुमकेसरनिकरभरामोद
मूर्च्छितादिगंते मधुरमधुविधुरेमधुपेमधौ भवेदुत्कंठा ३७ ७

यः तस्यआमोदः गंधस्तेनमूर्छितादिगंतायस्मिन् पुनः कथंभूतः मधुरमधुरपुष्परसः त स्मिन्विधुराआसक्ताः मधुपाभ्रमरायास्मिन् ३७ ७ ७ ७

॥ श्रीमत्राधाकृष्णोविजयते . श्रीजानकीवल्लभायनमः श्रीगोपालजी

म॰भृं॰ अच्छाच्छः शुभ्राशुभ्रः चंदनरसस्तेन आर्द्राः करायासांतामृगाक्ष्यः तथाचधारागृहाणिकुसु श॰
११ मानिच कौमुदीचंद्रकलामंदोमरुद्वायुः सुमनसः लताः हर्म्यपृष्ठः शुचिः एतेपदार्थाःग्रीष्मेमदंच २
मदनंचवर्द्धयंति ३८ स्रजः हृद्यः आमोदः परिमलोयासांताः व्यजनस्यपवनश्चंद्रकिरणाःपरा

अथग्रीष्मः अच्छाच्छचंदनरसार्द्रकरामृगाक्ष्योधारागृहाणिकुसुमानिच
कौमुदीच मंदोमरुत्सुमनसःशुचिहर्म्यपृष्ठंग्रीष्मेमदंचमदनंचविवर्द्धयंति
३८ स्रजोहृद्यामोदाव्यजनपवनश्चंद्रकिरणाःपरागःकासारोमलयजरजः
सीधुविशदम्

गः पुष्परजः कासारः सरोवरं मलयजंचंदनं तस्यरजः सीधुमद्यंविशदं ११
शुचिः सौधोराजसदनंतस्यउत्संगः उपरिभागः प्रतनुकोमलंसूक्ष्मवसनंपंकजदृशः कमलनयनाः

स्त्रियः एतेषां पदार्थानां ग्रीष्मे सुखं तूर्णं शीघ्रं सुकृतिनो लभंते ३९ सुधया शुभ्रं धाम गृ
हं स्फुरंतः अमला रश्मयः किरणा यस्या सौ शशधरश्चंद्रः प्रियायावक्त्रांभोजं अतिसुरभि सु

शुचिः सौधोत्संगः प्रतनुवसनं पंकजदृशो निदाघस्तूर्णं तत्सुखमुपलभंते सु
कृतिनः ३९ सुधाशुभ्रं धामस्फुरदमलरश्मिः शशधरः प्रियावक्त्रांभोजं मल
यजरजश्चातिसुरभिः स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने करोत्यंतः
क्षोभं न तु विषयसंसर्गविमुखे ४० गंधं मलयजं रजः स्रजो माल्यानि हृद्यः आमो
दो गंधो यासां तास्तदिदमखिलं सर्वं रागिणि जने एतेषु पदार्थेषु विषयेषु यस्य यास्मिन् जने
अंतः क्षोभं करोति न तु विषयसंसर्गविमुखे जने क्षोभं करोति ४० ७ ७

४१ वियद्गगनमुपचितामेघायस्मिन् तत्तु उपचितमेघं कंदलाजाताः यासुताः कंदलिन्योभू
मयः नवाः कुटजाः कदंबाश्चतेषामामोदो गंधोयेषु एवंतुते गंधवाहाः वायवः शिखिकुल

अथवर्षासमयः तरुणीवेषादीपितकामाविकासितजातिःपुण्यसुगंधिः उन्न
तपीनपयोधरभाराप्राहृट्कुरुतेकस्यनहर्षम् ४१ वियदुपचितमेघंभूमयः
कंदलिन्योनवकुटजकदंबामोदिनोगंधवाहाः शिखिकुलकलकेकारावर
म्यावनांताःसुखिनमसुखिनंवासर्वमुत्कंठयंति ४२

स्यमयूरकुलस्यकेकारा

वाः वाणीशब्दास्तैरम्यावनांताः वनप्रदेशाः एतेप्राहृट्कालेसुखिनमसुखिनंवासर्वमुत्कंठ
यंतिमदनाविर्भावेन उत्कंठितं कुर्वंति ४२

कश्चन पथिकः मार्गं गच्छति यस्य उपरि घनं निबिडं घनानां पटलं तिर्यग्गामनप्रदेशे नार्त्तिता
मयूरा येषु ते गिरयः वसुधाकंदलैः धवला एवं सति पथिकः विरहेण कं तुष्टिं संतोषं यातयतु मा
प्नोतु ४३ इतः विद्युद्वल्ली विद्युल्लता इतः केतकितरोः स्फुरदतीव गंधः इतः प्रकर्षेण उद्यन् जल

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्त्तितमयूराः वसुधाकंदलधवला तुष्टिं
पथिकः कां अथ यातयतु ४३ इतो विद्युद्वल्ली विलसितमितः केतकितरोः स्फुरद्गं
धः प्रोद्यज्जलदनिनदस्फूर्जितमितः इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यंते ते विरहदिवसाः संभृतरसाः ४४

दनिनदस्य मेघशब्दस्य स्फूर्जितं इतः के
किनां मयूराणां क्रीडासु कलकलरवः गंभीरशब्दः एवं सति पक्ष्मलदृशां स्त्रीणां संभृतरसाः रसवंतः
विरहदिवसा एते कथं यास्यंति गमिष्यंति ४४

असूचीसंसारेनसूच्यतेसंसारोयास्मिन् तमासिअंधकारेएवंभूतेनभसिश्रावणमासे कथं
भूतेघौदाश्वतेजलदाश्वतेषांध्वनिभासेहृषदःपाषाणाउपरिनीरनिचयेपततिएवमिदंसौदामि

असूचीसंसारेत्तमासिनभासिघौदजलदध्वनिभासेतास्मिन्पततिहृषदोनीर
निचये इदंसौदामिन्याःकनककमनीयंविलासितंमुदंचग्लानिंचप्रथयति
पथिष्वेवस्कहृशाम् ४५ आसारेणनहर्म्यतःप्रियतमैर्यातुंयदाशक्यतेशी
तोत्कंपनिमित्तमायतहृशागाढंसमालिंग्यते

न्यांविद्युतोविलसितंस्फुरणंकनकव
कमनीयंसुंदरंसुहृशांस्त्रीणांपथिष्वेवमुदंहर्षंचाविरहिणांम्लानिंचम्लानतांचप्रथयतिप्रकटी
करोति ४५ मेघच्छन्नेदुर्दिनेदिनोदयेजातेपिसतिप्रियतमैःपतिभिःनिद्रारसेनआसारेणपर्जन्य

धारयायदाबाहिर्हर्म्यतः गृहात् यातुंनशक्यते तदाशीतोत्कंपनिमित्तमायतदृशाविस्तीर्णनेत्र
यास्त्रियागाढमत्यंतंप्रियंआलिंग्यते अथचमरुतोवायवः शीतलशीकराअंबुकणाजाताःखेद-
च्छिदोवांतिएवंधन्यानांप्रियासंगमेदुर्दिनमपिसुदिनतांयातिसुकरंभवति ४८ कश्चनपुरुषःका

जाताःशीतलशीकराश्चमरुतोवांत्यंतखेदाच्छिदोधन्यानांबतदुर्दिनंसुदि
नतांयातिप्रियासंगमे ४८ अथशरत् अर्द्धंनीत्वानिशायाःसरभससुरतायास
खिन्नश्लथांगःप्रोद्भूतासह्यतृष्णामधुमदनिरतोहर्म्यपृष्ठेविविक्ते

पीनिशायाःअर्द्ध
नीलासरसभंसुरतेआयासः कष्टः तेनाखिन्नःखेदंप्राप्तः अतएवश्लथांगःसन् हर्म्यपृष्ठेविविक्ते
एकांतेप्रकर्षेणउद्भूता असह्या तृष्णातयामधुमदनिरतः शारदंसलिलंनपिबातिसमंदभाग्यः

कथंभूतमधरासंसंभोगक्लांताकृशीभूताकांतातस्याः शिथिलभुजलतातयातार्ज्जितंनिर्षेधि
तम् ४७ हेमंतऋतौ केचित्पुरुषाः दधिच दुग्धंच सर्पिः घृतंच एतानिअशनंयेषांतेमांजिष्ठंवा
सः विभ्रतितेकाश्मीरंकुंकुमकेसरंतस्यद्रवः रसः तेनसांद्रंनिबिडंदिग्धमुद्वर्तनमेवंभूतंवपुःये

संभोगक्लांतकाताशिथिलभुजलतातर्ज्जितंकंकरांतोजोत्स्नाभिन्नाधरासंपि
बतिनसलिलंशारदंमंदभाग्यः ४७ हेमंतेदधिदुग्धसर्पिरशनामांजिष्ठवासो-
भृतःकाश्मीरद्रवसांद्रदिग्धवपुषःखिन्नाविचित्रैरतैः पीनोरस्थलकामिनी
जनकृताश्लेषागृहाभ्यंतरंतांबूलीदलपूगपूरितमुखाधन्याःसुखंशेरते ४८

षांतैर्विचित्रैःरतैः खिन्नाः खेदंप्राप्ताःपीनंमांसलमुरस्थलंयस्य एवंभूतःकामिनीजनस्तेनकृताःआश्ले
षाआलिंगनानियेषांतांबूली

दलैः पूगैः पूरितानि सुखानि येषां ते एवंभूताः धन्याः गृहाभ्यंतरं गृहमध्ये सुखं शेरते निद्रां कुर्वंति
४८ शिशिरे कामिनः भोगकाले यथा कुर्वंति तथा वायवोपि कुर्वंति इति श्लेषः अलकवति केशव
ति मुखे गंडभित्तीः श्रुतिः प्रबला वायवः मुखे केशान् इतस्ततो नयंति ते नैव मिषेण चुंबंति पुनः कथं सी

अथ शिशिरः चुंबंतो गंडभित्तीरलकवति मुखे सीत्कृतान्यादधाना वक्षःसूत्कंचु
केषु स्तनभरपुलकोद्भेदमापादयंतः ऊरू नाकंपयंतः पृथुजघनतटान्स्रंसयंतों
शुकानि व्यक्तं कांताजनानां विटपचरितकृतः शैशिरा वांति वाताः ४९ कृतं आदधानाः

शीतातिशयेन सर्वेपि सीत्कृतानि कुर्वंति तान्येव वायुभिः कृतानि उत्कंचुकेषु वक्षःसु स्तनभारे पुलकोद्भेद
मापादयंतः ऊरून् आकंपयंतः पृथुजघनतटात् अंशुकानि स्रंसयंतः निष्काशयंतः एवं कांताजनानां विट
चरितकृतः विटा भांडाः तेषां चरितमिव कुर्वंति ते शैशिराः शिशिरे भवा वाताः वांति वहंति ४९

भ.श्टं.
१५

अथ शैशिरः मरुत्संभाति इदानीं कांतास्फुरन्नीषु कांतायते कांत इव भवति तत्कथं केशानाकलयन् शा.
दृशः दृष्टीः मुकुलयन् आच्छादयन् वासः वस्त्रं बलादाक्षिपन् निष्कासयन् पुलकाः रोमांचाः तेषामुद्ग २
मं आतन्वन् विस्तारयन् आलिंग्य शनैः कंपयन् वारंवारमुदाराणि बहूनि सीत्कृतानि कारयति दंतच्छ

केशानाकलयन् दृशो मुकुलयन् वासो बलादाक्षिपन् आतन्वन् पुलकोद्गमं प्रकटयन्
न्नालिंग्य कंपं शनैः वारंवारमुदारसीत्कृतकृतो दंतच्छदान्पीडयन् प्रायः शैशिर ए
ष संप्रति मरुत्कांतासु कांतायते ५०

दान् ओष्ठान् पीडयन् एवं प्रायः कांत एव भवति ऋतु
वर्णनं इच्छिकामिनां विषयिणां मनोरथारूढा इति भावः कथं तेषां कर्तव्यानि ज्ञात्वा त्यक्तव्यानि इ १५
तिकरणात दुक्तानि अधुना पक्ष द्वय निरूपणम् ५० ७ ७ ७

यत् यस्मात् कारणात् वा इति विकल्पेन नु इति वितर्के इदं सकलदोषास्पदं इति जुगुप्सा तां निंदां कु
र्वीता एते विरतिविरसाः वैरतये विरसाः एवंभूता विषयाः असाराः निःसाराः संतु तथापि तत्त्वे प्राणिहि

असाराः संत्वेते विरतिविरसा यासविषया जुगुप्सा तां यद्वा नं नु सकलदोषा
स्पदमिति तथाप्यंतस्तत्त्वेप्रणिहितधियामप्यातिबलस्तदीयो नारव्ये-
यः स्फुरति हृदये कोपि महिमा

तधियां वशीकृतबुद्धीनामपि तदीयः तस्याः स्थिरः अयं तदीयः कोपि महिमा अतिबलः वक्तुं
न् आख्येयः वक्तुं न शक्यः एवंभूतः स्फुरति हृदये वा आश्चर्यम् ५१ ७ ७ ७
श्रीराधाकृष्णो विजयते श्रीगोपालकृष्णाय नमः श्रीसीतारामचंद्रजी प्रसन्न

भवंतोयूयंवेदांतेप्रकर्षेणनिहिताबुद्धिर्यैस्तेषामामाभ्वगुरवश्चवयंतु विदग्धाः आलापाः शब्दा
येषांतथाभूतानांकवीनांअनुचराः सेवकास्तथापिनाहिपराहितात्पुण्यमधिकं एतद्बूमौआस्मिन्सं

भवंतोवेदांतप्रणिहितधियामाप्तगुरवो विदग्धालापानांवयमपिकवीनामनु
चराः तथाप्येतद्ब्रूमोनाहिपराहितात्पुण्यमधिकंनचास्मिन्संसारेकुवलय
दृशोरम्यमपरम् ५२ किमिहबहुभिरुक्तैर्युक्तिशून्यैःप्रलापैर्द्वयमिह
पुरुषाणांसर्वदासेवनीयम् अभिनवमदलीलालालसंसुंदरीणांस्तनभ
रपरिखिन्नंयौवनंवावनंवा ५३

सारे कुवलयदृशः अपरंरम्यंनास्ति इतिजानीम॰ ५२ इहलोकेबहुभिरुक्तैर्वचनैः किंप्रयोजनम् कथंभूतैरुक्तैर्युक्तिशून्यैःप्रलापैः अर्थवि

राहितैः तर्हि मयोच्यते तच्छ्रूयतां इह पुरुषाणां पुरुषैर्द्वयम् सर्वदा सेवनीयं किं अभिनवा नूतना अपूर्वा मदस्यलीलास्ताभिः सुंदरीणां स्तनभरेण परिखिन्नं यौवनं सेवनीयं अथवा वनं सेवनीयम्
५३ भोजनाः अहं सत्यं वच्मि वदामि न पक्षपातात् सर्वेषु इदमेतत्तथ्यं यथार्थं तत् किं नितंबिनी

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेषु च तथ्यमेतत् नान्यन्मनोहारि नितं
बिनीभ्यो दुःखैकहेतुर्न च कश्चिदन्यः ५४ अथ दुर्विरक्तप्रशंसा तावदेव कृति
नामपि स्फुरत्येष निर्मलविवेकदीपकः यावदेव न कुरंगचक्षुषां ताड्यते च
पललोचनांचलैः ५५

भ्यः स्त्रीभ्यः मनोहारि मनः संतुष्टिकरं अन्यद्द्वितीयं नास्ति वि
षयिणां परमार्थिनां तु स्त्रीभ्यः दुःखैकहेतुः दुःखस्य कारणमन्यन्नास्ति ५४ ५५ ७

श्रुतिसुखरसुखानांबहुवल्काणांपंडितानांकेवलंसंगत्यागमुद्दिश्यवार्त्ताभवतिनतुत्यागंकुर्वं
तिकिंपिवि कुवलयनयनानांकमलनयनानांस्त्रीणांमणीनांग्रंथिकांचीकलापोयास्मिन् तत्
जघनंविहातुंसक्तुंकः समर्थः नकोपीत्यर्थः ५६ पंडितोयुवतीर्निंदतिसः स्वस्यापिपरस्यापिप्र

वंचासिभवतिसंगत्यागमुद्दिश्यवार्त्ताश्रुतिसुखरसुखानांकेवलंपंडितानाम्
जघनमरुणरत्नग्रंथिकांचीकलापंकुवलयनयनानांकोविहातुंसमर्थः ५६
स्वपरप्रतारकोसौनिंदतियोलीकंपंडितोयुवतीः यस्मात्तपसोपिफलंस्वर्ग
स्यापिफलंतथाप्सरसः ५७

तारकः प्रतारणामात्रंअलीकंवृथाकरोतिकिमितित
स्मात्कारणात्तपसोपिफलंस्वर्गः तथास्वर्गस्यापिफलमप्सरसः ५७ छ छ

५८ नरस्तावत्सन्मार्गे आस्तेइंद्रियाणांजेतातावत्प्रभवतिसमर्थो भवतितावल्लज्जांविधत्तेवि
नयमपितावत्समालंबते यावल्लीलावतीनां एतेदृष्टिबाणाःहृदिनपतंति कथंभूताः बाणाः

मत्तेभकुंभदलनेभुविसंतिशूराः केचित्प्रचंडमृगराजवधेपिदक्षाः किंतुब्रवी
मिबलिनांपुरतःप्रसह्य कंदर्पदर्पदलनेविरलामनुष्याः ५८ सन्मार्गेतावदास्तेप्र
भवतिसनरस्तावदेवेंद्रियाणां लज्जांतावद्विधत्तेविनयमपिसमालंबतेतावदेव
भ्रूचापाकृष्टमुक्ताःश्रवणपथगतानीलपक्ष्माणएते यावल्लीलावतीनांनहृदि
धृतिमुषादृष्टिबाणाःपतंति ५९
भ्रूरेवचापोधनुः तेनआकृष्टाश्चतेमुक्ताश्चतुपुनःश्रवणप
थंगताःकर्णपर्यंतंगताःपुनःकथंभूताः नीलपक्ष्माणः नीलानिनेत्रपक्ष्माणितएवपुंखाःपक्षाःयेषांते
पुनःकथंभूताः धृतिर्धैर्यंमुषंतिचोरयंतितेधृतिमुषः ५९

भ॰ शृं॰ उन्मत्तमविचारितंयत्प्रेमतस्यसंरंभादादरात् यत्कार्यमंगनाआरंभतेतत्रप्रत्यूहंविपरीतंकर्तुं श॰
१८ ब्रह्मापिखलुनिश्चयेनकातरः असमर्थः ६० ६१ शास्त्रज्ञःप्रथितविनयश्चवादमत्यंतमात्मबो २

उन्मत्तप्रेमसंरंभादारंभंतेयदंगना तत्रप्रत्यूहमाधातुंब्रह्मापिखलुकातरः ६०ता
वन्महत्त्वंपांडित्यंकुलीनत्वंविवेकिता यावज्ज्वलतिनांगेषुहतःपंचेषुपावकः ६१शा
स्त्रज्ञोपिप्रथितविनयोप्यात्मबोधोपिगाढंसंसारेस्मिन्भवतिविरलोभाजनंसद्गती
नाम् येनैतास्मिन्निरयनगरद्वारमुद्घाटयंती वामाक्षीणांभवतिकुटिलाभ्रूलताकुं
चिकेव ६२

धः ज्ञानीसद्गतीनांभाजनंपात्रं एतादृशःपुरुषः अस्मिन् संसारेविरलःकदाचि १८
त्कश्चिद्भवतितर्हिसर्वेपितादृशाःकुतोनभवंति तत्रकारणमस्तियेनकारणेनएवास्मिन्संसारेवामा

क्षीणां स्फुनयनानां स्त्रीणां कुटिला वक्रा भ्रूलता आकुंचिका भवति आकर्षणं भवति कथंभूता भ्रूलता निरयनगरस्य द्वारमुद्धाटयंती उद्घाटयंती ६२ कृशः काणः एकनेत्ररहितः खंजः एकपादेन हीनः श्रवणरहितः पुच्छविकलः व्रणी सर्वांगे व्रणा यस्य पूयेन क्लिन्नः लिप्तः कृमीणां कुलं बाहुल्यं तस्य

कृशः काणः खंजः श्रवणरहितः पुच्छविकलो व्रणी पूयक्लिन्नः कृमिकुलशतैराच्छन्नतनुः क्षुधाक्षामो जीर्णो मृण्मयकपालार्पितगलः शुनीमन्वेति श्वा हतमपि निहंत्येव मदनः ६३

शतैः आवृततनुः क्षुधया क्षामः कृशीभूतः जीर्णः वृद्धोपीवरः मृण्मयपात्रस्य कपालः कंठः तेन अर्पितगलः एतादृशः श्वा शुनीमनुप्रष्टुत एति अतो मदनः हतं अपि च आदौ शरीरावस्थानिमृतप्रायं संहंति मारयति विवेको नास्तीत्यर्थः ६३ ७ ७

भ०भृं० राज्ञोमुद्रयासर्वंकार्यंभवतिअतोझषकेतनस्यमदनस्यस्त्रीमुद्राभवतिअनयासर्वंभवतिअतोमु श०
१९ द्रांविहायत्यक्त्वायेमूढाः कुधियः कुत्सितबुद्धयः यानिमिथ्याफलानिस्वर्गादिकानिअप्रत्यक्षाणिता २
निअन्वेषयंतितेमूढाः कथंभूतांस्त्रीमुद्रांमदनस्यजननीमुत्पादयंतींसर्वार्थानांसंपादनंकरोतीतिय

स्त्रीमुद्रांझषकेतनस्यजननींसर्वार्थसंपत्करींयेमूढाःप्रविहाययांतिकुधियोमि
थ्याफलान्वेषिणः तेतेनैवनिहत्यनिर्दयतरंनग्नीकृतामुंडिताः केचित्पंचशिखीकृ
ताश्चजटिलाः कापालिकाश्चापरे६४

स्वाधीनंमुद्रातस्यसर्वासंपदोभवंतियोमुद्रायाउल्लंघ
नंकरोतितस्यराजादंडकरोभवतिमारयतिच अतोमदनेनतेमूढास्तेनैवकर्मणानिहत्यनिर्दयतरंय १९
थास्यात्तथानग्नीकृतामुंडिताश्चकेचित्पंचशिखीकृताः केचिज्जटिलाः केचिदपरेकापालिकाःपात्रंकरेधृ
त्वाभिक्षाटनंकारिताः राजापियेनान्यायः कृतः तस्यएवमेवदंडंकरोतीत्यर्थः ६४

यातंवाशुंच अंबुउदकंच शुष्कपर्णानिच अश्नंतिभक्षयंतितेवातांबुपर्णाशनाः एवंभूताः विश्वा
मित्रपराशरप्रभृतयः तेपिस्त्रीमुखपंकजंस्खलितंसुंदरंदृष्ट्वैवदर्शनमात्रेणैवमोहंगताः प्रा-
प्ताः किंपुनयत् शाल्यन्नंतंडुलोदनंतदपिसघृतंपुनः पयोदधियुतंयेमानवाभुंजंतितेषामिंद्रि

विश्वामित्रपराशरप्रभृतयोवातांबुपर्णाशनास्तेपिस्त्रीमुखपंकजं
स्खलितंदृष्ट्वैवमोहंगताः शाल्यन्नंघृतसंयुतंदधिपयोभुंजंतिये
मानवास्तेषामिंद्रियनिग्रहोयदिभवेद्विंध्यस्तरेत्सागरम् ६५

यनिग्रहः बतखेदेनकथंभवेत् अत्रदृष्टांतः यदिविंध्याद्रिःसागरंतरेत्तदापूर्वोक्तयामिंद्रिय
निग्रहः ६५ इतिदुर्विरक्तप्रशंसासमाप्ता ७ ७ ७

भ॰ शृं॰ अथस्त्रीणांपरित्यागप्रशंसा प्रकर्षेणउद्यदिंदोर्द्युतीनांतेजसांनिचयंसमुदायंबिभ्रतिताः प्रेंख शृ॰
२० च्छब्दायमानः कांचीकलापोयासांताः स्तनानांभारेणविनम्रः मध्यभागोयासांताः एवंभूताः ए २
ताः अंभोजनेत्राः स्त्रियः तरुण्योनस्युः नआसन् तर्हिअमलधियोमानवाअस्मिन्असारेसंसा

संसारेस्मिन्नसारेकुनृपतिभवनद्वारसेवावलंबव्यासंगव्यस्तधैर्यंकथममलधि
योमानसंसंविदध्युः यद्येताःप्रोद्यदिंदुद्युतिनिचयभृतोनस्युरंभोजनेत्राःप्रेंखत्कां
चीकलापाःस्तनभरविनमन्मध्यभागास्तरुण्यः ६६

रेकुनृपतयःकुत्सितानृपतयस्ते
षांभवनद्वाराणांसेवाअवलंबनेव्यासंगस्तेनव्यस्तंधैर्यंएवंमानसंमनःकथंविदध्युःकुर्युःएतस्याभा २०
वः यदिस्त्रियोनआसन्तदाबुद्धिमंतःसेवांनकुर्युःस्त्रीनिमित्तंराजसेवांकुर्वंइतिव्यासंगेनमनःनं
चलमधैर्यंभवति ६६

यदिस्मरारस्त्रांस्त्रियः नस्युः नासन् तदाहिमवतः हिमालयस्य स्थाने। स्थिते। स्थित्वा कामेन स्त्री शिरः प्रणाममलिनं कुर्वीत कथंभूताः। स्त्रियः अत्रस्तायेकुरंगशावास्तेषांनयनानीवनयना। नियासांताः कथंभूते हिमवतःस्थाने सिद्धैः अध्यासिताः अधिष्ठिताः कंदरायस्य हरवृषो

सिद्धाध्यासितकंदरे हरवृषस्कंधावगाढद्रुमे गंगाधौतशिलातले हिमवतःस्थाने स्थिते श्रेयसि

नंदीतेनस्कंदेन अवगाढा अवरुद्धाद्रुमायास्मिन् पुनःगंगाधौता। निशिलातलानियास्मिन् श्रेयसिपुण्यरूपे अयंभावः प्रशस्तेशब्दंमनोयस्य मनस्वीजनः यस्यम नस्वीजनः यस्यमनः शब्दंतस्यसाधनेंतरस्य अनपेक्षायदामालिनंमनस्तदामनसः शुद्ध्यर्थंसा धनांतराणिकर्तव्यानि संप्रतिमनोमलिनस्त्रीभिरेवाक्रियते अतः स्त्रीणामभावएवउत्पन्ना।

भ॰ शृं॰ २१

नस्फः तदा मनोपि मालिनं नैव भवेत् तदा मनस्वीजनः हिमवतः स्थाने गत्वा शिरःप्रणाममेव किमर्थं मलिनं करिष्यति मलिनतायाः कारणं स्त्रीरेव स्त्री मदनस्य अस्त्रं यस्यांगं संगच्छति स मूर्छितो भवति ६७ रे संसार यदि अंतरा त्वन्मध्ये मदिरेक्षणाः स्त्रियो दुस्तराः नस्फुस्तदा भ

कः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो यद्यत्र स्तकुरंगशावन
यनानस्फुः स्मरास्त्रं स्त्रियः ६७ संसार तव निस्तारपदवी न दवीयसी
अंतरा दुस्तरा न स्फुर्यदि रे मदिरेक्षणाः ६८ ७ ७

व निस्तारपदवीस्थितिः न दवीयसी दीर्घा नैव ६८ इति श्रीस्त्रीणां परित्यागविधिः श्री सीतारामचंद्रार्पणमस्तु ७ ७ ७ ७ ७

श॰ २ २१

भोराजन् इहजगतिकश्चिदेवतृष्णांबुराशेः तृष्णासमुद्रस्यअवसानंपारंनहिगतः स्ववपुषि यौवनेचसानुरागेअतिप्रियेगालितेसतिप्रभूतैः पुष्कलैः अर्थैः द्रव्यैः कोवार्थः प्रयोजनंनाव

अथयौवनप्रशंसा राजन्तृष्णांबुराशेर्नहिजगतिगतः कश्चिदेवावसानंकोवार्थोर्थैः प्रभूतैःस्ववपुषिगलितेयौवनेसानुरागे गच्छामःसद्मयावद्विकासितकुमुदेंदीवरालोकनानां यावन्नाक्रम्यरूपं झटितिनजरयालुप्यतेप्रेयसीनाम् ६९

द्विकासितानिनयनान्येवइंदीवराणितैः आलोकितंद्रष्टुंशीलं यासांतासांप्रेयसीनांप्रियाणांसद्मगृहंप्रतिगच्छामः यावत्जरयातासांरूपमाक्रम्यझ टितिशीघ्रंनलुप्यते ६९

अस्मिन् लोके यौवनात्तारुण्यादन्यत् द्वितीयमनर्थकरं नास्ति कथंभूतं यौवनं रागस्य इच्छा
या एकमगारं गृहं नरकाणां शतानि तेषु महादुःखानि तेषां प्राप्तिः तस्य हेतुः कारणं मोहस्यो
त्पत्तिः तस्या बीजं ज्ञानलक्षणस्य ताराधिपस्य चंद्रस्य जलधरपटलं मेघपटलमाच्छादकं कंदर्पो

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतुर्मोहस्योत्पत्तिबीजं
जलधरपटलं ज्ञानताराधिपस्य कंदर्पस्यैकमित्रं प्रकटितविविधस्प
ष्टदोषप्रबंधं लोकेऽस्मिन्नह्यनर्थं निजकुलदहनं यौवनादन्यदस्ति ७०

मदनस्तस्य एकं मित्रं प्रकटिता विविधा नानाप्रकाराः स्पष्टदोषास्तेषां प्रबंधं रचना निजं स्वकीयं कुलं
तस्य दहनं दाहकं एवं यौवनं निंद्यमिति ७०

थ्यः नवेयौवनेतारुण्येप्राप्तेसातिविक्रियांविकारंनकलयातिनकरोतिसधन्यः कथंभूतेयौवनेशृं
गाराएवद्रुमास्तेषांनीरदेयथाजलप्राप्तौवृक्षाः शोभंते तथायौवनेनभृंगाराः शोभंतेप्रचुरक्री

शृंगारद्रुमनीरदेप्रचुरतः क्रीडारसस्रोतसिप्रद्युम्नप्रियबांधवेचतुर
तामुक्ताफलोदन्वति तन्वीनेत्रचकोरपारणाविधौसौभाग्यलक्ष्मीनिधौ
धन्यः कोपिनविक्रियांकलयतिप्राप्तेनवेयौवने ७१

डानांरसास्तेषांस्रोतसि
सेतौ प्रद्युम्नोमदनस्तस्याप्रियेबांधवेबंधौचतुरतालक्षणानिमुक्ताफलानितेषामुदन्वतिस
मुद्रेतन्वीस्त्रुंदरस्त्रीतस्यानेत्रेएवचकोरौतयोः पारणंतस्याविधानेसौभाग्यलक्ष्मीनिधौस्थाप
नापात्रे ७१ इतियौवनप्रशंसासमाप्ता ७ ७

भ.श्टं. पुरुषःस्त्रियंप्रत्यक्षंअशुचीनांपुत्रिकांजानन्नपिउत्सुकोपिमर्यादोभवतिसमदोभवतिमोदते श.
२२ नहर्षंप्राप्नोतिरमतेचइतिस्तौतिइतीतिकथंतस्याअभिधानंगृण्हातिकांतेसुंदरेउत्पललोच २

अथकामिनीगर्हणप्रशंसा कांतेत्युत्पललोचनेतिविपुलश्रोणीभ
रेत्युत्सुकः पीनोत्तुंगपयोधरेतिसुमुखांभोजेतिसुभ्रूरिति दृष्ट्वा-
माद्यतिमोदतेनिरमतेप्रस्तौतिजानन्नपिप्रत्यक्षाशुचिपुत्रिकांस्त्रियम
होमोहस्यदुश्चेष्टितम् ७२

नेविपुलश्रोणीभरोकटिप्रदेशोयस्याः सापी
नौ मांसलौ उत्तुंगौ ऊर्द्धौ पयोधरौ यस्याः सासुष्टुमुखांभोजंयस्याः साएवमभिधानानिगृ २२
हीत्वास्तौति अहो इति आश्चर्यमिदंमोहस्य दुश्चेष्टितम् ७२ ७ ७

७३ विषादतिरिच्यतेअधिकाभवति ७४ ७५ लोके यंत्राणिसंति तैर्मारणो
च्चाटनवशीकरणादिक्रियाः क्रियंते अतः स्त्रीयंत्रं केनब्रह्मणासृष्टं निर्मितं कथंभूतं सं

श्रुत्वाभवतितापायदृष्टावोन्मादवर्द्धिनी स्पृष्टाभवतिमोहायसानाम
दयिताकथम् ७३ तावदेवामृतमयीयावल्लोचनगोचरा चक्षुःपथा
दपगताविषादप्यतिरिच्यते ७४ नामृतंनाविषंकिंचिदेकांमुक्तानितंबिनी
मृसैवामृतलतारक्ताविरक्ताविषवल्लरी ७५ आवर्त्तः संशयानामविनयभ
वनंपत्तनंसाहसानांदोषाणांसन्निधानंकपटशतमयंक्षेत्रमप्रत्ययानाम्

शयानामावर्त्तः परस्त्रीस्वभावेनसत्वकृत्स्नोपिसिनश्चेतु इतरे संशयं कुर्वंति पुनः दोषा

णांसान्निधानंसर्वेदोषास्तत्सान्निधानेभवंति अप्रत्ययानामगुणानांक्षेत्रंस्वर्गद्वारस्यविघ्नं
नाशनशीलंनरकाणांपत्तुरंतस्यमुखंसर्वासांमायानामलीकानांकरंडंस्थापनपात्रंएतादृशं
स्त्रीयंत्रंप्राणिनांमोहपाशोभवति ७६ एषः शशांकः सत्यत्वेनवदनीभूतानैवनच इंदीवर

स्वर्गद्वारस्यविघ्नंनरकपुरमुखंसर्वमायाकरंडंस्त्रीयंत्रंकेनसृष्टंविषम
मृतमयंप्राणिनांमोहपाशम् ७६ सत्यत्वेनशशांकएषवदनीभूतोनवेंदी
वरद्वंद्वंलोचनतांगतंनकनकैरप्यंगयष्टिःकृता किंत्वेवंकविभिःप्रतारि
तमनास्तत्वंविजानन्नपित्वङ्मांसास्थिमयंवपुर्मृगदृशांमंदोजनःसेवते
७७ द्वंद्वेनसत्यत्वेनलोचनतांगतेकनकैः सुवर्णैरपिसत्यत्वेन अंगयष्टिर्नकृ-

नाकिंतु एवमुक्तप्रकारेण कविभिः उपपादत्वात् अतः मतारितमनास्त्वत्त्वोजानन्नपि पंदोजनः मृगदृ-
शांत्वक् मांसास्थिमज्जुरंव पुः सेवने ७७ ७८ यत्वमस्मात कारणात् पूर्णेंदुः तस्यद्युति

लीलावतीनांसहजाविलासास्तथैव मूढस्य हृदि स्मरंति रागोनलि
न्याहिनिसर्गसिद्धस्तत्रभ्रमत्येव मुदाषडंघ्रिः ७८ यदेतत्पूर्णेंदु
द्युतिहरदुदाराकृतिवरंमुखाब्जंतन्वंग्याःकिलवसतितत्राधरमधु

नेजः नतत् हरती निद्युतिहरदुदारा आकृतिर्यस्य नतत्वरंश्रेष्ठं ॥ वंतन्वंग्यामुखाब्जं तत्र अधरमधु
वसतीतिकिलश्रूयते नाहिं इदं तावसाकद्रुपस्यफलं अस्मिन्काले यौवनेनेतानि प्रतिक्षपिनेसानिश्चनी
नाविरसांविषमिवाभ्रस्वदंभविष्यतियथापाक द्रुपस्यफलंपक्काकालोपचितंतेनरसवत्नोने

 कालातिक्रमेणतन्ननश्यतिविषमिवभवतितथातरुण्यामुखमपि ७९ कांतानामनदीकृत्वाउ 
भयोः सादृश्यंवर्ण्यते उन्मीलत्त्रिवलीरोमावल्यः ताएवतरंगास्तेषांनिलयंस्थानंयस्याः सा
प्रकर्षेणउत्तुंगंउच्चंपीनंमांसलंस्तनद्वयंनदेवउद्यंतन्चक्रवाकंयस्याः सावक्त्रमेवांबुजंतेनउ

इदंतावत्पाकद्रुमफलमिवातीतविरसंव्यतीतेस्मिन्कालेविष
मिवभाविव्यत्यस्फरवदम् ७९ उन्मीलत्त्रिवलीतरंगनिलयाप्रो
त्तुंगपीनस्तनद्वंद्वेनोद्यतचक्रवाकमिथुनावक्त्रांबुजोद्भासिनी

द्भासिना शोभायमानाएवंभूताकांताकारधरानदीइयमभितः समंततः क्रूरः आशयः 
अभिप्रायोयस्याः नदीपक्षेआशयः आवर्त्तः हेजनाः यदिभवतांसंसारार्णवपज्जनंनेष्यते

इच्छानास्तितर्हिभवद्भिः इयंदूरेणसंत्यज्यताम् ८० ८१ ८२ हेसखे अस्मान् योषिन्

कांताकारधरानदीमभिगताक्रूराशयानेष्यतेसंसारार्णवमज्जनं
यदितत्तोदूरेणसंत्यज्यताम् ८० जल्पंतिसार्द्धमन्येनपश्यंत्यन्यंसवि
भ्रमाः हृदयेचिंतयंत्यन्यंप्रियः कोनामयोषिताम् ८१ मधुतिष्ठतिवा
चियोषितांहृदिहालाहलमेवकेवलम् अतएवनिपीयतेधरो हृद
यंमुष्टिभिरेवताड्यते ८२ अपसरवैदूरादस्मात्कटाक्षविशिखान
लात्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः

सर्पान् दूरादपसरगच्छ कथंभूतात् सर्पात् कटाक्षएवविशिखोबाणः नस्य अनलः अग्नि

भ॰ शृं॰ योऽस्मिन्नस्मात् पुनः कथंभूतान् प्रकृत्यास्वभावेन देहेन वा विषमान्कुटिलान्द्रक्कात्पुनः निलासा श

२८ ग॰व फणा बिभर्ति तस्मात्किमित्युच्यते इतरफणिना सर्पेण दष्टः औषधैश्चिकित्सितुं शक्यं ने १

चतुरवनिताभोगग्रस्तं मंत्रिणः हि निश्चयेन त्यजंति अतो दूरादेव अपसर ८३ मकरकेतनेन

इतरफणिना दष्टःशक्यश्चिकित्सितुमौषधैश्चतुरवनिताभोगग्रस्तंत्यजंति
हिमंत्रिणः ८३ विसारिणिमकरकेतनधीवरेणस्त्रीसंज्ञितंबडिशमत्रभवांबु
राशौयेनाचिरात्तदधरामिषलोलमर्त्यमत्स्यान्विकृष्यपचत्यनुरागवह्नौ ८४

मदनेन धीवरेण कैवर्त्तकेण अत्र भवांबुराशौ भवसमुद्रे स्त्रीसंज्ञितं बडिशंजालं विसारितं प्र ९१

सृतं किमर्थं येन बडिशेन अचिरात्क्षणात्तस्याः स्त्रियः अधर एव आमिषं तस्मिन्लोलाः सतृष्णा ये म

र्त्यमत्स्याः तान् विकृष्य अनुरागः प्रीतिः स एव वह्निः तस्मिन् पचति ८४

८५ तच्चक्षुषा तस्याः चक्षुषा अहिना अहं न दश्यः वरं श्रेष्ठम् उत्तमं कथंभूतेन विशेषेण आ-
दीर्घेण चलेन चंचलेन वक्रगामिना तेजस्विना भोगिना भोगो नाम फणा विद्यते यस्य तच्चक्षुषः

कामिनीकायकांतारे कुचपर्वतदुर्गमे मा संचर मनः पांथ तत्रास्ते स्म
रस्तस्करः ८५ व्यादीर्घेण चलेन वक्रगामिना तेजस्विना भोगिना नीलाब्ज
द्युतिना अहिना वरम् अहं दष्टो न तच्चक्षुषा दष्टमासाति निर्विचिकित्सका दिशि दि
शि प्रायेण धर्मार्थिनो मुग्धाक्षीक्षणवीक्षितस्य नहि मे वैद्यो न चाप्यौषधम् ८६

नाना भोगाभवं निचीलमञ्जनन द्युतिर्यस्य नेन इनरेण अहिना दष्टाः दिशि दिशि प्राय शो धर्मा-
र्थिनः निर्विकित्सकाः सांनि परंतु मुग्धाक्षी तस्याः ईक्षण वीक्षितस्य मे वैद्यो नास्ति औषधमपि नास्ति
८६

भ. भू. इहन्नोकेमधुरगीतं कर्णयोर्विषयः एतन्नृत्यंचक्षुषोर्विषयः अयंरसः रसनायाः विषयः अ ग्र
२२ मौपरिमलः स्फुरतिघ्राणस्यविषयः एषस्तनानांस्पर्शः स्पर्शस्यविषयः इतिपंचेंद्रियाणांपं २

इहहिमधुरगीतंनृत्यमेतद्रसोयंस्फुरतिपरिमलोसौस्पर्शएषस्तनानाम् इति
हतपरमार्थैरिंद्रियैर्भ्राम्यमाणोह्यहितकरणदक्षैःपंचभिर्वंचितोसि ८७ न
गम्योमंत्राणांनचभवतिभैषज्यविषयोनचापिप्रध्वंसंव्रजतिविविधैःशांतिक
शतैः

चविषयाः हेजनत्वमेभिः पंचभिरिंद्रियैः भ्राम्यमाणः सन् वंचितोसिकथंभूतैरिं
द्रियैः हतः नाशितः परमार्थोयैः पुनः अहितंनरकादिकं तस्यकरणेदक्षैः ८७ अयंस्मरःम २७
दनः अपस्मारोवर्त्तते अपस्मारनिवारणार्थमुपायाः संतितेकर्तव्याः इतिचेत्तर्हिअयंनथा

नभवति अयंकथंभूतः मंत्राणांनगम्यः नभैषज्यविषयः नभवतिपुनः विविधैरनेक प्रकारैः शांतिकशतैः नचापिप्रध्वंसंव्रजतिनाशंनप्राप्नोति अथचभ्रमस्यआवेशात् अंगेकिमपिभव्यं

भ्रमावेशादंगे किमपिविविधैर्भव्यमसमं स्मरोपस्मारोयं भ्रमयतिदृशं घूर्णयतिच ८८ जात्यंधायचदुर्मुखायचजराजीर्णाखिलांगायचग्रामीणायच दुष्कुलायचगलत्कुष्टाभिभूतायतु

कर्तव्यमसमंविदधत्यत्किंचित्करोतिदृशं दृशिंभ्रमयति घूर्णयतिच ८८ पण्यस्त्रीपुंवेश्यासुकः रज्येत इच्छांकरोति कथंभूतास्त्रजात्यंधायच दुर्मुखायचजरयाजीर्णानि आखिलानि अंगानियस्य तस्मैग्रामीणाय अचतुराय दुष्कुलंनीचकुलं तत्रउत्पन्नायच गलत्कुष्टेन आभिभूताय पीडिताय एवमादयेलक्ष्मीलवश्रद्धयाअल्पद्रव्यमा

स्यर्थं मनोहरं सुंदरं निजं स्वकीयं वपुः शरीरं प्रयच्छंतीषु पुनः कथंभूतासु विवेककल्पलतिका कल्पवल्ली तस्याः शस्त्रीषु शस्त्रभूतासु छेदकासु ८९ ९० कुलपुरुषः सत्कीवा मनोज्ञं सुंदरमपि वेश्याधरपल्लवं चुंबति अकुलीनः चुंबति कुलपुरुषस्तु नैव किमिति कथंभूतं वेश्याधरपल्ल



यच्छंतीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया पण्यस्त्रीषु विवेककल्पलति
काशस्त्रीषु रज्येत कः ८९ वेश्यासौ मदनज्वाला रूपेंधनसमेधिता कामिभि
र्यत्र हूयंते यौवनानि धनानि च ९० कश्चुंबति कुलपुरुषो वेश्याधरपल्लवं मनो
ज्ञमपि चारभटचौरचेटकनटविटाविनिष्ठीवनशरावं ९१

चारो हेरः भटः भाटः चौरश्चोरः चेटकं करोति स चेटकः नटः नर्तकः विटः भांडः इत्यादीनां निष्ठीवनं लालोदकं त्यजते तस्य शरावमात्रं एवं निंद्यं ९१ इति कामिनीनिर्गर्हे ०

तएवधन्याःयेषांमनः चपलानिआयततानिविस्तीर्णानिलोचनानियासांतासां आकृतिं रूपं दृष्ट्वावि
कृतिंनएति कथंभूतानांतारुण्यरूपंघनौपयोधरौयासांपुनः क्षामंकृशमुदरंतस्योपरिलसंत्यःशो
भायमानात्रिवलयोयासाम् ९२ हेबालेत्वयालीलयामुकुलितमस्म्यस्यंयथास्यात्तथाअमीसुंदराः

अथसुविरक्तप्रशंसा धन्यास्तएवतरलायतलोचनानांतारुण्यरूपघनपीनपयोध
राणाम् क्षामोदरोपरिलसत्त्रिवलीलतानांदृष्ट्वाकृतिंविकृतिमेतिमनोनयेषाम्
९२ बालेलीलामुकुलितममीसुंदराहाष्टिपाताःकिंक्षिप्यंतेविरमविरमव्यर्थएषश्रम
स्ते संप्रत्यन्येवयमुपरतंबाल्यमास्थावनांतेक्षीणोमोहस्तृणमिवजगज्जालमालोक
यामः ९३ दृष्टिपाताःकिंकिमर्थंक्षिप्यंतेत्यज्यंतेसंप्रतिअधुनातेतवएषःश्रमःव्यर्थःनिरर्थकः
किमितिवयमन्येपूर्वेनभवामः इदानीमस्माकंबाल्यमुपरतंभज्ञानंगतम्वनांतेआस्थाउत्पन्नामोहःक्षीणः
इदंजगज्जालंतृणमिव आलोकयामः अतोविरम विरामंप्राप्नुहि ९३ ७

भ॰ शृं॰ २९

इयंबालासांप्रतिअनवरतंसविकलंचक्षुः क्षिपतित्यजति अनयाकिमभिप्रेतंमनसिकिमिच्छ- श॰
तिनजानेकथंभूतंचक्षुः इंदीवरंनीलोत्पलंतस्यप्रभाकांतिस्तांचोरयतितदस्माकंमोहोगतःस्मर २
एवशबरः कैवर्त्तकः तस्यबाणानांव्यतिकरेणअतिशयेनप्रेषितेनयाज्वलज्ज्वालास्ताःशांताः तदपिए
वंसति इयंवराकीमूर्खानविरमातिविरामंनप्राप्नोति ९४ शुभ्रंसद्मगृहंसविभ्रमाःसविलासायुवत

इयंबालामांप्रत्यनवरतमिंदीवरदलप्रभाचोरंचक्षुःक्षिपतिकिमभिप्रेतमनया-
गतोमोहोस्माकंस्मरशबरबाणव्यतिकरज्वलज्ज्वालाःशांतास्तदपिनवराकीवि
रमति ९४ शुभ्रंसद्मसविभ्रमायुवतयःश्वेतातपत्रोज्ज्वलालक्ष्मीरित्यनुभूयते-
स्थिरमिवस्फीतेशुभेकर्मणि यस्तरुण्यःश्वेतमातपत्रंतदुज्ज्वलालक्ष्मीः इतिस्फीतेपु २९
ष्कलेशुभेकर्मणिसतिस्थिराइव अनुभूयतेतदेवाविच्छिन्नेजातेसतिभितरामत्यंतमनंगस्यमद

नस्य कलहेन याक्रीडा तस्यां त्रुटत्तं तुकं गच्छति मुक्ताजालं झटिति शीघ्रं भ्रश्यत् दिशः भ्रश्य
दैकैकं चतुर्दिशासु प्रयाति तद्वत्सूर्वोदृश्यतां पश्यतां ९५ सदा योगाभ्यासस्य व्यसनेन वशयोः आ-
त्मा च मनश्च आत्ममनसी अविच्छिन्ना मैत्री स्फुरति वर्तते एवंभूतस्य यमिनः इंद्रियनिग्रहकर्त्तुस्त

विच्छिन्नोतितरामनंगकलहक्रीडात्रुटत्तंतुकं मुक्ताजालमिव प्रयाति झटिति
भ्रश्यद्दिशो दृश्यतां ९५ सदा योगाभ्यासव्यसनवशयोरात्ममनसोरविच्छिन्ना
मैत्री स्फुरति यमिनस्तस्य किमु तैः प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषस्मरतैः ९६

स्य तैः किमु किं प्रयोजनं तैः कैः प्रियाणा
मालापैः अधरमधुभिः वक्त्रान् विधुभिः निष्काशितैः निश्वासेन सह आमोदैः गंधैः कुचकलशा
नामाश्लेषैः आलिंगनैः सह स्मरतैः इत्यादिभिः किं प्रयोजनम् ९६

१७ यदास्माकंस्मरतिमिरे अंधकारेसंचारेणजनितमज्ञान मासीत् तदासर्वमिदमशेषं जगन्नारी
मयंनारीमचुरमभूत् इदानीमधुनाअस्माकमतिशयेन पटुविवेक एव अंजनंतेन युक्तादृष्टिर्येषाम

किंकंदर्पकरंकदर्थयासिकिंकोदंड झंकारितैरेरेकोकिलकोमलंकलरवैःकिंत्वं
वृथावल्गसे मुग्धस्निग्धविदग्धमुग्धमधुरैर्लोलैकपक्षैरलं चेतश्चुंबितिचंद्रचू
डचरणध्यानामृतंवर्तते १७ यदासीदज्ञानंस्मरतिमिरसंचारजनितंतदासर्वंना
रीमयमिदमशेषंजगदभूत् इदानीमस्माकंपटुतरविवेकांजनदृशांसमीभूता
दृष्टिस्त्रिभुवनमपिब्रह्ममनुते १८ वैराग्येसंचरत्येकोनीतौभ्रमतिचापरः शृं
गारेरमतेकश्चिद्भुविभेदाःपरस्परं १९ स्माकंदृष्टिः समीभूतासमतांप्राप्तात्रिभुवनमपिब्र
ह्मेमनुतेमानयति इतिस्फुनरांविरक्तः स्फुविरक्तमशंसा १८ १९ ७ ७ ७ ३०

यस्य यत् रुचिरं नास्ति तत्र मनोज्ञेपि रुचि सुधांशौ अस्य स्पृहा न भवति अत्र दृष्टांतः चंद्रस्तु सर्वेषां प्रिय करः रमणीयः तास्मिन् सूर्यविकाशिन्याः सरोजिन्याः मनसः कामः प्रीतिर्नैव भवति एवं यस्य यत्र प्रीतिस्तस्य तत्तु रुचिकरम् अतो नीतिः शृंगारश्च वैराग्यं च उक्तं एतेषु यत्र यस्य प्रीतिस्तेन तद्द्रष्टव्यं इदं शृंगारशतकं भर्तृहारिणा कृतं तत् कामबुध्या न कृतं आदावेव आरंभे समस्तभावैः खलु बंधनं

यद्यस्य नास्ति रुचिरं तत्रास्य स्पृहा न भोग्येपि रमणीयेपि सुधांशौ न मनः कामः सरोजिन्याः १०० इति श्रीभर्तृहरिकृत शृंगारशतकं संपूर्णम् ७

स्त्रिय इत्युक्तम् मध्येपि दुःखैकहेतुर्नहि कश्चिदस्ति इत्यादीनि वचनानि स्थले स्थले स्थितानि तासां कामिनीनां प्रशंसा कामिभिः क्रियते सा लिखिता ग्रंथे सर्वविवेकदृष्ट्या निंदनम् १०० ७

॥ ७ ॥ इति श्रीभर्तृहरिणा विरचित टीकायां शृंगारशतकं समाप्तं ॥ ७ ॥

